नोद्वाह्याः । 'गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्विजः । गुरोश्च कन्यां शिष्यो वा तत्स-तत्यापि नेष्यते ॥ पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते । वाक्सम्बन्धकृतानां तु स्नेह-सम्बन्धभागिनाम् ॥ विवाहोत्र न कर्तव्यो लोकगर्हा प्रसज्यते ॥' इति वचनाच्चे-त्याहुः । तत्र मूलं चिन्त्यम् ॥

दत्तकविषये तूच्यते । तत्र **गौतमः**–'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृ-बन्धुभ्यः' । पञ्चमादिति बन्धुग्रहणान्न दत्तकमात्रपरमिदम् । किन्तु सन्तानेपि । एतत् क्षेत्रजादिसर्वद्व्यामुष्यायणपरमिति **हरदत्तः** । अत्र **स्मृतिचन्द्रिका**–'नियोगाद्य उत्पादयति तस्माद्बीजिनोप्यूर्ध्वं सप्तमादित्यर्थः' इति । दत्तकस्य जनकविषयमेतदिति **सापिण्ड्यमीमांसायाम्** । तेन दत्तकस्य जनककुले साप्तपौरुषं जननीकुले पञ्चपौरुषं सापिण्ड्यम् । 'दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता । सप्तमी पञ्चमी चैव गोत्रित्वं-पालकस्य च ।' बृहन्मनूक्तेः। 'बीजिनश्च' इति **गौतमोक्तेश्च** । पालकपितृकुले तु पञ्च-पुरुषम् । तथा **चापरार्के पैठीनसिः**–'त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत्' इति । एतत्स एव व्याचख्यौ दत्तकादीन् पुत्रान् पितृपक्षतो निवृत्तपिण्डगोत्रार्षेयान्प्रत्येत-दुच्यते पञ्च पितृत इति नान्यान् प्रतीति । यत्तु **वृद्धगौतमः**–'स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः । विधिना गोत्रमायान्ति न सापिण्ड्यं विधीयते ॥' यच्च **वसिष्ठः**–'अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः । स्वगोत्रेण स्वशाखोक्तविधिना स्यात्स्वशाखभाक् ॥' इति । यच्च **नारदः**–'धर्मार्थं वर्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् । अंशपिण्डविभागित्वं तेषु केवलमीरितम् ॥' तत्पालककुले साप्तपौरुषं सापिड्यं न इत्ये-वंपरम् । न तु सर्वथा सापिण्ड्यनिषेधपरमिति **सापिण्ड्यमीमांसायाम्** । **मदनपा-रिजातादपि** दत्तकानुप्रवेशेऽल्पं सापिण्ड्यं प्रतिभाति । तथाहि तेन त्रीनतीत्येत्युदा-हृत्य यस्य माता दत्तपुत्री प्रतिगृहीत्रा पुत्रीकृता तस्याः प्रतिगृहीतृकुले त्रीनतीत्येति । पञ्च पितृतः इति यस्य दत्तपुत्रः पिता तस्य दत्तस्य यज्जनककुलं तद्विषयमित्युक्तम् । वस्तुतस्तु पूर्ववचसां महानिबन्धेषु क्वाप्यनुपलम्भादपरार्कादिलेखनाभावात् । पूर्वोक्त-व्यवस्थायाश्च प्रातिभज्ञानतुल्यत्वाच्चैरेतल्लिखितं तेषामेव शोभते ।

मम तु पालककुले एकपिण्डदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिण्ड्यम् । 'बीजिनश्च' इति **गौतमोक्तेर्जनककुलेपि** तावदेव । 'त्रीन् मातृतः' इत्यादि तु सवर्ण-सापत्नमातृकुलपरम् । 'यद्येकजाता बहवः' इतिशांखैकवाक्यत्वादिति युक्तं प्रति-भाति । अत एवास्य द्व्यामुष्यायणत्वं **हेमाद्रिप्रवरमञ्जरीवृत्तिकृन्नारायणा-दिभिरुक्तम्** । **भट्टसोमेश्वरेणापि**–'पृथायाः कुन्तिभोजस्य पालककन्यात्वेपि ऊर्ध्वं सप्तमात् पितृबन्धुबीजिनश्च' इति **गौतमोक्तेर्दत्त्रिमायाः** पृथायाः जनकस्य शूरसेनस्य कुलेपि साप्तपौरुषं पालककुलेपि तावदेव **सापिण्ड्यमुक्तमपि वा कारणाग्रहणे**

इत्यत्र । सापिण्ड्यदीपिकायां तु दत्तक्रीतादीनां जनकगोत्रेणोपनयने कृते जनककुले साप्तपौरुषं सापिण्डयम् । पालकमातापितृकुले त्रिपुरुषम् । पिण्डनिर्वापान्निर्वाप्यलक्षणं त्रिपुरुषं सापिण्डयम् । पालकगोत्रेणोपनयने तत्कुले साप्तपौरुषमित्युक्तं तन्न । 'चूडोपायनसंस्कारा निजगोत्रेण वै कृताः । दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते' ॥ इति **कालिकापुराणा**दुपनयनोत्तरं दत्तकनिषेधात् । त्रिपुरुषमित्यत्रापि मूलं मृग्यमित्यलं बहुना ॥

मातापितृद्वारकसापिण्ड्यवर्तीनां कन्यानामियं संख्या **रामवाजपेयिनो**क्ता । 'उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकृद्दम्पती द्वंद्वं तस्य चतुष्कमष्ट च ततोप्यस्य क्रमात् षोडश । वंशारम्भकदम्पतीप्रमितिरित्यासप्तकक्षं रदा एकैकान्वयकन्यकाः पितृकुले त्वासप्तकक्षं ब्रुवे ॥ यद्यप्येकस्य बहवः सुताः स्युस्तदपीह तु । सम्बन्धसाम्यादेकैकगणितेत्यवधार्यताम् ॥ एकस्मान्मिथुनात्सुतोथ दुहिता द्वंद्वद्वयं तद्द्वयात्तस्माद्द्वंद्वचतुष्कमष्ट च ततोतः षोडशाऽतो रदाः ॥ यावत्सप्तमकक्षमग्निऋतवः कन्या इहैकान्वये ता दन्तैर्गुणिता रसैकसदृशो वंशे सपिण्डाः पितुः ॥ मातुर्जन्मददम्पती च मिथुनं द्वंद्वं तयोः सागरास्तस्याः पञ्चमकक्षमष्टमितिरित्येकान्वयः पुंसुते । द्वन्द्वाद्द्वन्द्वयुगं भतोऽथ इतोऽष्टौ पञ्चकक्षं शरक्षोण्यः सप्तगुणाः शराभ्रविधवो मातुः सपिण्डाः कुले ॥ कुलद्वयस्य कन्यकायुता मिथः सपिण्डकाः । हिमांशुदृग्धरादृशो विवाहकर्मवर्जिताः ॥' इति एतच्च सर्ववर्णसाधारणम् । सर्वत्र सापिण्डयसद्भावादिति **विज्ञानेश्वरो**क्तेः । 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् । सपिण्डता निवर्तेत सर्ववर्णेष्वयं विधिः ॥' इति **हरनाथधृतदेवलवचना**च्च । सम्बन्धतत्त्वे **सुमन्तुः**-'पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत्परित्यज्यैनां मातृवद्बिभृयात्' इति दिक् । ऋषेरिदमार्षं प्रवरः । गोत्रं प्रसिद्धम् । समाने आर्षे गोत्रे यस्य तस्माज्जाता या न भवति ताम् ॥

अथ संक्षेपेण **गोत्रप्रवरनिर्णयः** । तौ च भिन्नौ निषेधे निमित्तम् । 'सगोत्राय दुहितरं न प्रयच्छेत्' इति **आपस्तम्बो**क्तेः । 'असमानप्रवरैर्विवाहः' इति **गौतमो**क्तेश्च । तत्र गोत्रलक्षणमाह **प्रवरमञ्जर्यां बौधायनः**-'विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येत्ये सप्त ऋषयः । सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रम्' इति । यद्यपि केवलभार्गवेष्वार्ष्टिषेणादिषु केवलाङ्गिरसेषु च हरितादिषु च नैतत् । भृग्वंगिरसोरुक्तेष्वनन्तर्गतेः तथाप्यत्रेष्टापत्तिरेवेति केचित् । अत एव **स्मृत्यर्थसारे** । प्रवरैक्यादेवात्राविवाह उक्तः । यद्यपि वसिष्ठादीनां न गोत्रत्वं युक्तम् । तेषां सप्तर्षित्वेन तदपत्यत्वाभा-

गोत्रप्रवरनिर्णयः ।

---

१-तात्त्विकोप्यर्थ उक्त एव ।

वात् तथापि तत्पूर्वभाविवसिष्ठाद्यपत्यत्वेन गोत्रत्वं युक्तम् । अत एव पूर्वेषां परेषां चैत-द्गोत्रम् । अत्र विशेषोऽस्मत्कृतप्रवरदर्पणे ज्ञेयः ॥

**प्रवरास्तु** प्रवर्णानि प्रवराः । **कल्पकारा** हि वासिष्ठेतिहोतावासिष्ठवदित्यध्वर्यु-रित्यादिना येषां प्रवरणमामनन्ति ते प्रवराः । तच्च वरणं यद्यपि क्वचिद्दृश्यते तथापि पूर्ववदृषिभेदो द्रष्टव्यः । अन्यथा तेषां त्र्यार्षेये एकार्षे इत्यादि निर्देशानुपपत्तेः । अन्ये तु तद्गोत्राणां त्र्यार्षेय इति भेदमाहुरिति दिक् । तत्त्वं तु गोत्रभूतस्य पितृपितामहप्रपितामहा एव प्रवराः । 'पितैवाग्रेथ पुत्रोथ पौत्रः' इति **शतपथश्रुतेः** । 'परंपरं प्रथमम्' इत्या-**श्वलायनोक्तेश्च** । अत्र विशेषमाह **बौधायनः**–'एक एव ऋषिर्यावत् प्रवरेष्वनुव-र्तते । तावत्समानगोत्रत्वमन्यत्र भृग्वंगिरसां गणात्' इति । **स्मृत्यर्थसारे**–'म्रीय-माणा तया वापि सत्तया वानुवर्तनम् । एकस्य दृश्यते यत्र तद् गोत्रं तस्य कथ्यते ॥' भृग्वंगिरोगणेषु तु **माधवीये स्मृत्यन्तरे**–'पञ्चार्षे त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृग्वंगिरोगणेष्वेव शेषेष्वेकोपि वारयेत्' ॥ शेषगोत्रेषु एकोपि समानः प्रवरो विवाहं वारयेदित्यर्थः । **बौधायनोपि**–'भृग्वंगिरसावधिकृत्य द्व्यार्षेयसन्निपाते विवाहस्त्र्यार्षे-यसन्निपाते विवाहः पञ्चार्षेयाणाम्' इति भृग्वंगिरोगणेष्वापि जमदग्निगौतमभरद्वाजेष्वेकप्र-रसाम्ये सर्वेषामप्यसाम्ये वा सगोत्रत्वादेवाविवाह इति दिक् ॥

**अथ गोत्राणि प्रवराश्चोच्यन्ते** ॥ तत्र **बौधायनः**–'गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि च । ऊनपंचाशदेवैषां प्रवरा ऋषिदर्शनात् ।' तत्र सप्त भृगवः । वत्सा बिदा आर्ष्टिषेणा यस्का मित्रयुवा वैन्यः शुनका इति । वत्सानां भार्गवच्यावनाप्न-वानौर्वजामदग्न्येति । भार्गवौर्वजामदग्न्येति वा । भार्गवच्यावनाप्नवानेति वा ॥ बिदानां पञ्च भार्गवच्यावनाप्नवानौर्वबैदेति भार्गवौर्वजामदग्न्येति वा । एतौ द्वौ जाम-दग्न्यसंज्ञौ । आर्ष्टिषेणानां भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति । भार्गवार्ष्टिषेणानूपेति वा । एषां त्रयाणां परस्परमविवाहः । वात्स्यानां भार्गवच्यावनाप्नवानेति ॥ वत्सपु-रोधसयोः पंच । भार्गवच्यावनाप्नवानवात्सपौरोधसेति । बैजवनिमतिथयोः पंच भार्ग-वच्यावनाप्नवानबैजमतिथेति एते त्रयः क्वचित् । एषामपि पूर्वैरविवाहः । अत्र तत्तद्गणस्था ऋषयोन्यश्च विशेषो मत्कृते प्रवरदर्पणे ज्ञेयः । यस्कानां भार्गव-वैतहव्यसावेतसेति । **मित्रयुवानां** भार्गववाध्र्यश्वदैवोदासेति । भार्गवच्यावनदैवो-दासेति वा । वाध्र्यश्वेत्येको वा वैन्यानां भार्गववैन्यपार्थेति । एत एव श्येताः । शुन-कानां शुनकेति वा गार्त्समदेति द्वौ वा । भार्गवशौनहोत्रगार्त्समदेति त्रयो वा । वेदवि-श्वज्योतिषां भार्गववेदवैश्वज्योतिषेति । शाठरमाठराणां भार्गवशाठरमाठरेति । एतौ द्वौ क्वचित् । यस्कादीनां स्वगणं त्यक्त्वा सर्वैर्विवाहः । तदुक्तं **स्मृत्यर्थसारे**– 'यस्का मित्रयुवा वैन्याः शुनकाः प्रवरैक्यतः । स्वंस्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥' इति ।

**भृगोः सप्त गणाः ७ ।**

**वत्साः १, बिदाः २, आर्ष्टिषेणाः ३, यस्काः ४, मित्रयुवाः ५, वैन्याः ६, शुनकाः ७, इति ।**

**वत्साः१**–( जामदग्न्याः ) मार्कण्डेय माण्डूकेय माण्डव्यादीनि षट्सप्तति ७६ गोत्राणि वत्साः। तेषां–भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पञ्च प्रवराः । वा–भार्गवौर्वजामदग्न्येति त्रयः । वा–भार्गवच्यावनाप्नवानेति त्रयः । ( कात्यायनलौगाक्षिसूत्रादौ दार्म्यादयश्चतुष्पञ्चाशत् ५४, **मात्स्ये**–नाडायनादयो, द्वाचत्वारिंशत् ४२, एवमन्यत्र बलभृदादयोऽन्येऽपि द्वाविंशतिः, वत्सा उक्ताः[2]) ।

**बिदाः२**–( जामदग्न्याः ) बौधायनविदशैलेत्यादीनि त्रयोदश १३ गोत्राणि बिदाः । तेषां–भार्गवच्यावनाप्नवानौर्वबैदेति पञ्च प्रवराः । वा–भार्गवौर्वजामदग्न्येति त्रयः । ( कात्यायनोक्ताः पौलस्त्यादयोऽष्ट ८, मात्स्योक्ता जमदग्न्यादयश्चत्वारो ४ऽन्येऽपि च विदा इति ) ।

**आर्ष्टिषेणाः३**–( केवलभृगवः ) नैरथ्यादीनि नव९ गोत्राण्यार्ष्टिषेणाः । तेषां– भार्गवच्यावनाप्नवानार्ष्टिषेणानूपेति पञ्च प्रवराः । वा–भार्गवार्ष्टिषेणानूपेति त्रयः । ( कात्या०– नेकष्यादयः षट्६, मात्स्योक्ता भृग्वन्दीयादयः पञ्चा५न्ये चार्ष्टिषेणा इति )॥ वत्सादित्रयाणां प्रवरत्रयतुल्यत्वात्परस्परमविवाहः ।

**वात्स्याः**–भार्गवच्यावनाप्नवानेति त्रयः प्रवराः ।

**वत्सपुरोधसः**–भार्गवच्यावनाप्नवानवत्सपौरोधसेति पञ्च प्र. ।

**बैजमथिताः**–भार्गवच्यावनाप्नवानबैजमथितेति पञ्च प्र. ॥ वात्स्येत्याद्यधिकमेतद्गणत्रयं क्वचित् एषु मिथः, उपरितनवत्सादित्रयेण चाऽविवाहः ।

**यस्काः४**–( के० भृ० मौनमूकवाधुलेत्यादीनि षड्विंशति२६ गोत्राणि यस्काः । तेषां–भार्गववैतहव्यसावेदसेति त्रयः प्रवराः । ( मात्स्योक्ताः वीतहव्यादयः षड्विंतिः २६ कात्या० माधुलादय एकादश११, इत्यन्ये च यस्काः ) ।

**मित्रयुवाः५**–( के० भृ० ) रौक्यायणनाशार्यजनगेष्टायनादीनि पञ्चदश१५ गोत्राणि मित्रयुवाः। तेषां–भार्गववाध्र्याश्वदैवोदासेति त्रयः प्र०। वा -भार्गवच्यवनदैवोदासेति त्रयः । वा-वाध्र्यश्वेत्येकः । ( कात्या० आश्वलायनादयो नव९, मा० शालायन्यादयश्चत्वारः४, इत्यन्येऽपि मित्रयुवाः ) ।

---

१-बौधायनोक्तानीमानि । एवमग्रेऽपि बोध्यम् । २ एषामपि पूर्वोक्ताः प्रवराः, एवमग्रेऽपि सर्वत्र बोध्यम् ।

**वैन्याः६**–(कं० भृ०) पार्थवाष्कलश्येतास्त्रयो ३ वैन्याः । तेषां--भार्गववैन्यपार्थेति त्रयः प्रवराः ।
**शुनकाः७**–( कं० भृ० ) याज्ञप्यादीनि दश १०। (कात्यायनोक्तानि) शाक्त्यायनश्रोण्यसनकेति ( मात्स्योक्तानि ) च गोत्राणि शुनकाः । तेषां–शौनकेत्येकः । वा--गार्त्समदेत्येकः । वा --भार्गवगार्त्समदेति द्वौ । वा--भार्गवशौनकहोत्रगार्त्समदेति त्रयः प्रवराः।

## कुत्रचिद्गणद्वयमधिकम् ।

**वेदविश्वज्योतिषाः**–एषां--भार्गववेदवैश्वज्योतिषेति त्रयः ।
**शाठरमाठराः**–एषां–भार्गवशाठरमाठरेति त्रयः प्र० ।

**अथाङ्गिरसः** । ते गौतमाः भरद्वाजाः केवलाङ्गिरसश्चेति त्रिधा । अत्र गौतमा दश–आयास्याः, शरद्वन्ताः, कौमण्डाः, दीर्घतमसः, औशनसाः, कारेणुपालेयः, राहूगणाः, सोमराजकाः, वामदेवाः, बृहदुक्थाश्चेति । तत्रायास्यानाम् आंगिरसायास्यगौतमेति । शरद्वन्तानाम् आंगिरसगौतमशारद्वन्तेति । कौमंडानाम् आङ्गिरसोतथ्यकाक्षीवन्तगौतमकौमाण्डेति वा । आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति वा । आङ्गिरसौतथ्यागौतमौशिजकाक्षीवतेति वा । आङ्गिरसौशिजकाक्षीवतेति त्रयो वा । दीर्घतमसाम् आंगिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति । आङ्गिरसौतथ्यदैर्घतमसेति त्रयो वा । औशनसाम् आङ्गिरसगौतमौशनसेति त्रयः । कारेणुपालानाम् आंगिरसगौतमकारेणुपालेति त्रयः । राहूगणानाम् आंगिरसराहूगणगौतमेति । सोमराजकानाम् आंगिरससोमराजकगौतमेति।वामदेवानाम् आङ्गिरसवामदेव्यगौतमेति । बृहदुक्थानाम् आङ्गिरस बार्हदुक्थगौतमेति । आङ्गिरसवामदेवबार्हदुक्थेति वा । उतथ्यानाम् आङ्गिरसौतथ्यगौतमेति । औशिजानामाङ्गिरसौशिजकाक्षीवतेत्यापस्तम्बः । आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति कात्यायनः।एतौ द्वौ क्वचित् । रघुवानाम् । आङ्गिरसराघुवगौतमेति केचित् । तत्र मूलं चिन्त्यम् । एषां सर्वेषां गौतमानामविवाहः ।

## आङ्गिरसगणास्त्रयः ३.

गौतमाः १, भारद्वाजाः २, केवलाङ्गिरसः ३, इति ।

### १ गौतमा दश १०–

**आयास्याः१**–श्रोणीवेषकवाक्षिमूढरथादयो विंशति२० रायास्याः । तेषाम्–आङ्गिरसायास्यगौतमेति त्रयः प्र. ।
**शारद्वताः२**–अभिजिति रौहिण्यक्षीरकरम्भादयो नव९ शारद्वताः । तेषाम्–आङ्गिरसगौतमशारद्वतेति त्रयः प्र० । ( कात्या० तौलेयादयः पञ्चत्रिंशत्३५, मात्स्योक्ता उतथ्यादयस्त्रिंशत्३० इत्यन्येऽपि शारद्वता इति ) ।

**कौमण्डाः३**—मामन्थरेषण मासुराक्षकाष्टेरम्यादयः सप्त७ कौमण्डाः। तेषाम्—आङ्गिरसौतथ्य-काक्षीवतगौतमकौमण्डेति पञ्च प्र० । वा—आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति पञ्च। वा—आङ्गिरसौतथ्यगौतमौशिजकाक्षीवतेति पञ्च वा—आङ्गिरसौशिज-काक्षीवतेति त्रयः प्रवराः ।

**दीर्घतमसः४**—एषाम्—आङ्गिरसौतथ्यकाक्षवितगौतमदैर्घतमसेति पञ्च । वा—आङ्गिरसौतथ्यदैर्घतमसेति त्रयः ।

**औशनसः५**—दिश्यादयः सप्त७ औशनसः । तेषाम्—आङ्गिरसगौतमौशनसेति त्रयः ।

**करेणुपालयः६**—वास्तव्यादयः षट्६ करेणुपालयः।तेषाम्—आङ्गिरसगौतमकारेणुपालेति त्रयः।

**राहूगणाः७**—एषाम्—आङ्गिरसराहूगणगौतमेति त्रयः ।

**सोमराजकाः८**—एषाम्—आंगिरससोमराजगौतमेति त्रयः ।

**वामदेवाः९**—एषाम्—आङ्गिरसवामदेव्यगौतमेति त्रयः ।

**बृहदुक्थाः१०**—एषाम्—आङ्गिरसबार्हदुक्थगौतमेति त्रयः । वा--आङ्गिरसवामदेव्यबार्हदुक्थेति त्रयः ।

## कुत्रचिद्गणद्वयमधिकम् ।

**उतथ्याः**—एषाम्—आङ्गिरसौतथ्यगौतमेति त्रयः ।

**औशिजाः**--एषाम्—आङ्गिरसौशिजकक्षीवतेति त्रय इत्यापस्तम्बः । कात्यायनस्तु--आङ्गिरसायास्यौशिजगौतमकाक्षीवतेति पञ्च ।

**राघुवाः**—एषाम्—आङ्गिरसराघुवगौतमेति त्रय इति केचित्, मूलन्त्वत्र मृग्यम् ॥

एषां गौतमानां परस्परमविवाहः, सगोत्रत्वात्, "गौतमानां सर्वेषामविवाहः" इति बोधायनोक्तेश्च

अथ भरद्वाजाः। ते चत्वारः। भरद्वाजाः, गर्गाः, ऋक्षाः, कपयः, इति । भरद्वाजानामाङ्गिरसबार्हस्पत्यभारद्वाजेति त्रयः । गर्गाणामाङ्गिरसबार्हस्पत्यभारद्वाजसैन्यगार्ग्येति पञ्च। आङ्गिरससैन्यगार्ग्येति वा। अन्त्ययोर्व्यत्ययो वा। भारद्वाजगार्ग्यसैन्येति वा। गर्गभेदानाम् आङ्गिरसतैत्तिरकापिभुवेति । ऋक्षाणां कपिलानां चाङ्गिरसबार्हस्पत्य भरद्वाजवान्दनमातवचसेति पञ्च। आङ्गिरसवान्दनमातवचसेति त्रयो वा। कपिलानामाङ्गिरसामहीयवो ऋक्षयसेति । आत्मभुवाम् आङ्गिरसभारद्वाजबार्हस्पत्यमन्त्रवरात्मभुवेति पञ्च। अयं क्वचित्। भरद्वाजानां सर्वेषामविवाहः ॥

## भारद्वाजगणाश्चत्वारः४ ।

**भरद्वाजः१**–काम्यायणमङ्गऽदेवाश्वादयोऽशीति ८० भारद्वाजाः । तेषाम्–आङ्गिरसबार्हस्पत्य-भारद्वाजेति त्रयः । ( कात्या० मार्कण्ड्यादयश्चतुश्चत्वारिंशत् ४४, कक्कोर्जायनावापस्तम्बोक्तौ, मात्स्योक्ताः शिलातल्यादयः षोडश १६, इत्यन्येऽपि भारद्वाजाः )।

**गर्गाः२**–साम्भरायणसखीनादयो द्वाविंशति २२ गर्गाः । तेषाम्–आङ्गिरसबार्हस्पत्यभारद्वाजशैन्यगार्ग्येति पञ्च । वा–आङ्गिरसशैन्यगार्ग्येति त्रयः । वा–आङ्गिरसगार्ग्यशैन्येति त्रयः । वा–भारद्वाजगार्ग्यशैन्येति त्रयः । [ तित्तिरिकपिभूमिस्वन्दिति खण्डितेति गर्गभेदानाम्–आङ्गिरसशैन्यगार्ग्येति त्रय इति कात्यायनः । आङ्गिरसतैत्तिरिकापिभुवेति त्रय इति मात्स्ये ] । ( कात्या० कालायनादयोऽष्टादश १८, मा० सभाराटयश्चत्वारिंशत् ४०, इत्यन्येऽपि गर्गाः )।

**ऋक्षाः३**–रौक्षायणादयः कात्यायनोक्ता नव९ ऋक्षाः । तेषाम्–आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचसेति पञ्च । वा–आङ्गिरसवान्दनमातवचसेति त्रयः ।

**कपयः४**–वैतलादयो नव९ कपयः । तेषाम्–आङ्गिरसामहीयवौरुक्षयसेति त्रयः । ( कात्या० तर्यादयः पञ्चदश १५, तरस्वदादयः षट् ६ हिरण्यकेशिसूत्रेऽधिकाः, मा० कपैतरादयो द्वादश १२ इत्यन्येऽपि कपयः ) ।

**आत्मभुवः**–एषाम्–आङ्गिरसभारद्वाजबार्हस्पत्यमन्त्रवरात्मभुवेति पञ्च । अयं गणः क्वचित्[1] ॥ एषां सर्वेषां भरद्वाजानां परस्परमविवाहः 'एषामविवाहः,इति बोधायनोक्तेः "भारद्वाजास्सकपयो गर्गा रौक्षायणा इति । चत्वारोऽपि भरद्वाजा गौत्रैक्यान्नान्वयुर्मिथः ॥" इति स्मृत्यर्थसारोक्तेश्च । एषां गौतमादिभिर्भवत्येव विवाहः, द्वित्रिप्रवराऽसाम्यात्सगोत्रत्वाभावाच्च ।

१ दन्त्यादिरपि क्वचित् ।

**अथ केवलाङ्गिरसः** । तेच षट्-हारिताः, कुत्साः, कण्वा, रथीतराः, मुद्गलाः, विष्णुवृद्धाश्चेति । हारितानां आङ्गिरसांबरीषयौवनाश्वेति । आद्यो मान्धाता वा । कुत्सानाम् आंगिरसमान्धातृकौत्सेति । कण्वानामाङ्गिरसाजमीढकाण्वेति आङ्गिरसघोरकाण्वेति वा ॥ रथीतराणामाङ्गिरसवैरूपराथीतरेति । आङ्गिरसवैरूपपार्षदश्वेति वा । अष्टादंष्ट्रपार्षदवैरूपेति वा । अन्त्ययोर्व्यत्ययो वा । मुद्गलानामाङ्गिरसभार्म्यश्वमौद्गल्येति । आद्यस्तार्क्ष्यो वा । आङ्गिरसतार्क्ष्यमौद्गल्येति वा । विष्णुवृद्धानामाङ्गिरसपौरुकुत्सत्रासदस्यवेति । एषां स्वगणं विहाय सर्वैर्विवाहो भवति । हारितकुत्सयोस्तु न भवति ॥

### ३ केवलाङ्गिरसां गणाः षट् ६ ।

**हारिताः१**—सांख्यदर्भसौभागादयः सप्तदश१७ हारिताः । तेषाम्—आङ्गिरसाम्बरीषयौवनाश्वेति त्रयः । वा—मान्धाताम्बरीषयौवनाश्वेति त्रयः । (कुत्सपिङ्गशङ्खदर्भास्त्रिय आश्वलायनोक्ताः, खाण्डायनादयः षोडश १६ मात्स्योक्ताः इत्यन्येऽपि हारिताः ) ।

**कुत्साः२**-एषाम्-आङ्गिरस मान्धातृ कौत्सेति त्रयः ।

**कण्वाः३**—औपमर्कटायनि भास्कल पौलाहल्यादयो नव९ कण्वाः । तेषाम्—आङ्गिरसाजमीढकाण्वेति त्रयः । वा—आङ्गिरस घोरकाण्वेति त्रयः । ( कात्या० भरुण्डादयो दश१०, मा. आर्षाद्यादयो द्वादश१२, इत्यन्येऽपि कण्वाः ) ।

**रथीतराः४**—हस्तिदासकद्रायनादयस्त्रयोदश१३ रथीतराः । तेषाम्—आंगिरस वैरूपराथीतरेति त्रयः । वा—आङ्गिरसवैरूपणार्षदश्वेति त्रयः । वा—अष्टादंष्ट्रवैरूपपार्षदश्वेति त्रयः । वा—अन्त्यद्वयोर्व्यत्ययः ।

**मुद्गलाः५**—सूनिच्छत्रहयतारणादयो द्वादश१२ मुद्गलाः । तेषाम्—आङ्गिरसभार्म्याश्वमौद्गल्येति त्रयः । वा—आद्यस्तार्क्ष्यः । वा—आंगिरसतार्क्ष्य मौद्गल्येति त्रयः । ( मात्स्योक्ताः सात्यमुग्र्यादयो दश१०, अन्येऽपि मुद्गलाः ) ।

**विष्णुवृद्धाः६**—शठमर्षणमद्रणादय एकादश११ विष्णुवृद्धाः । तेषाम्—आङ्गिरसपौरुकुत्स्य त्रासदस्यवेति त्रयः । ( उममित्यादयो दश१० हिरण्यकेशिसूत्रे उक्ताः, जतृणादयः सप्त७ । मात्स्ये, इत्यन्येपि विष्णुवृद्धाः ) ।

**अथात्रयः । ते चत्वारः । आत्रेयाः, वाद्भुतकाः, गविष्ठिराः, मुद्गला इति । आद्यानामात्रेयार्चनानसश्यावाश्वेति । वाद्भुतकानां अत्रेयार्चनानशवाद्भुतकेति ॥ धनंजयानाम् आत्रेयार्चनानसधानञ्जयेति क्वचित् । गविष्ठिराणामात्रेयार्चनानसगविष्ठिरेति । आत्रेयगाविष्ठिरपौर्वातिथेति वा । मुद्गलानामात्रेयार्चनानसपौर्वातिथेति । वामरथ्यसुमङ्गलबैजवापानामात्रेयार्चनानसातिथेति । आत्रेयार्चनानसगाविष्ठिरेति वा । सुमङ्गलानाम् अत्रिसुमङ्गलश्यावाश्वेति केचित् । अत्रेः पुत्रिकापुत्राणाम् । आत्रेयवामरथ्यपौत्रिकेति । अत्रीणां सर्वेषामविवाहः ॥**

### अत्रयश्चत्वारः ४ ।

**अत्रयः १**—भूमिच्छान्दिच्छन्दोग्यादयः पञ्चाश ५० दत्रयः । तेषाम्—आत्रेयार्चनानसश्यावाश्वेति त्रयः । ( कात्या० शाङ्खर्यादयो विंशति २०, साङ्ख्येयादयो द्वादश १२ मात्स्य, शाकटायनादयः षोडश १६ अन्यत्रोक्ताः, इत्यन्येऽप्यत्रयः ) ।

**वाद्भुतकाः २**—एषाम्—आत्रेयार्चनानसवाद्भुतकेति त्रयः ।

**धनञ्जयाः**—एषाम्—आत्रेयार्चनानसधानञ्जयेति त्रयः । अयंगणः क्वचित् ।

**गविष्ठिराः** ३—लाक्षिव्याड्यवरोधकृदादयो दश १०( कात्या. ) पूर्वातिथ्यादयः षोडश १६ ( मात्स्योक्ताः )च गविष्ठिराः । तेषाम्—आत्रेयार्चनानसगाविष्ठिरेति त्रयः । वा—आत्रेयगाविष्ठिरपौर्वातिथेति त्रयः ।

**मुद्गलाः** ४—व्यालसन्ध्यर्णवबोधाक्षादय एकादश ११ मुद्गलाः । तेषाम्—आत्रेयार्चनानसपौर्वतिथेति त्रयः ।

---

**वामरथ्य १-सुमङ्गल २-बैजवापाः** ३—एषाम्—आत्रेयार्त्तनानसातिथेति त्रयः ।

**सुमङ्गलाः** ४—एषाम्—आत्रिसुमङ्गलश्यावाश्वेति त्रयः । इमेऽपि चत्वारो गणाः इति केचिदाहुः।

---

**वालेयाः**—हालेयकेरेय वामरथ्यादयः सप्त ७ अत्रेः पुत्रिकापुत्राः । तेषाम्—आत्रेय वामरथ्य पौत्रिकेति त्रयः ।

---

एषां सर्वेषामत्रीणाम्परस्परमविवाहः, सगोत्रत्वात्सप्रवरत्वाच्च । अत्रेः पुत्रिकापुत्राणाञ्च वशिष्ठगणैरप्यविवाहः । अत्र पूर्वोक्तभृग्वादिष्वात्रिषु च यानि तुल्यानि नामानि, तत्र गोत्रप्रवरभेदादृषिभेदं ज्ञात्वा विवाहः कार्योऽन्यथा न । एवं सर्वत्र ज्ञेयम् ।

---

अथ **विश्वामित्राः** । ते दश । **कुशिकाः** । लोहिताः । रौक्षकाः । **कामायनाः**। कताः । धनंजयाः । अघमर्षणाः पूरणाः । इन्द्रकौशिका इति । कुशिकानां विश्वामित्र देवरातौदलेति । लोहितानां विष्वामित्राष्टकलोहितेति । अन्त्ययोर्व्यत्ययो वा । वैश्वामित्रमाधुच्छन्दसाष्टकेति वा । विश्वामित्राष्टकेति द्वौ वा । रौक्षकाणां वैश्वामित्रागाथिनरैवणोति वैश्वामित्ररौक्षकरैवणेति वा । कामकायनानां वैश्वामित्रदेवश्रवस दैवतरसेति वा । अजानां वैश्वामित्रमाधुच्छन्दसाजेति । वैश्वामित्राश्मरथवाधूलेति । अघमर्षणानां वैश्वामित्राघमर्षणकौशिकेति । पूरणानां वैश्वामित्रपौरणेति द्वौ वा वैश्वामित्रदेवरातपूरणेति वा । इन्द्रकौशिकानां वैवैश्वामित्रेन्द्रकौशिकेति द्वौ ॥ धनञ्जयानां विश्वामित्रमाधुच्छन्दसधानंजयेति वैश्वामित्रमाधुच्छन्दसाघमर्षणेति वा ॥ क्षीकतानां वैश्वामित्रकात्यालेति । एते बौधायनोक्ताः । रौहिणानां वैश्वामित्रमाधुच्छन्दसरौहिणेति । रेणूनां वैश्वामित्रगाथिनवैणवेति । वेणूनां वैश्वामित्रगाथिनवैणवेति । जह्नूनां वैश्वामित्रशालङ्कायनकौशिकेति । आश्मरथ्यानां वैश्वामित्राश्मरथ्यवाधूलेति । उदवेणूनां वैश्वामित्रगाथिनवैणवेति । एते **आश्वलायनमात्स्योक्ताः** । अन्यैरत्वन्योपि षड्गुणा उक्ताः । तेऽन्यत्र मत्कृतौ ज्ञेयाः । एषां विश्वामित्राणामविवाहः ।

## विश्वामित्रगणा दश १० ।

**कुशिकाः१**-पर्णजंववारक्यौदत्यादयो द्वाचत्वारिंशत्४२ कुशिकाः । तेषां-वैश्वामित्रदेवरातौ-दलेति त्रयः । ( देवरातादयो दश१० आपस्तम्बोक्ताः, यज्ञवदादयश्चत्वारः ४ केशिसूत्रोक्ताः, वैकृत्यादयः पञ्चदश१५ मात्स्योक्ताः. सौरथ्यादयश्चत्वारः ४,इति केचित्, इत्यन्येऽपि कुशिकाः ) ।

**लोहिताः२**-दाडक्यादयः षट्६ लोहिताः । तेषां-वैश्वामित्राष्टक-लौहितेति त्रयः । वा-अन्तिमयोर्विपर्यासः । वा-वैश्वामित्रमाधुच्छन्दसाष्टकेति त्रयः । वा-वैश्वामित्राष्टकेति द्वौ ।

**रौक्षकाः३**-सौद्गहलादयश्चत्वारो४ रौक्षकाः । तेषां-वैश्वामित्रगाथिनवैरणेति त्रयः। वा-वैश्वामित्ररौक्षकरैवणेति त्रयः ।

**कामकायनाः४**-श्रौमतादयः पञ्च५कामकायनाः । तेषां-विश्वामित्रदेवश्रवसदैवतरसेति त्रयः।

**अजाः५**-एषां-विश्वामित्रमाधुच्छन्दसाजेति त्रयः । वा-वैश्वामित्राश्मरथवाधूलेति त्रयः ।

**कताः६**-सैरंध्रादयोऽष्ट ८ कताः । तेषां-वैश्वामित्रकात्यात्कीलेति त्रयः । ( इन्दुवर्यादय एकादश११ लौगाक्षिमात्स्योक्ताः, तुङ्गायन्यादयोऽष्ट८ इति केचित्. इत्यन्येऽपि कताः । एवमाश्वलायनोक्ताः, कात्यायनोक्ताः,महाभारतोक्ताश्चाऽन्ये बहवः कता बोध्याः ) ।

**धनञ्जयाः७**-कारिष्यादयः षट्६ धनञ्जयाः । तेषां-वैश्वामित्रमाधुच्छन्दसधानञ्जयेति त्रयः वा-वैश्वामित्रमाधुच्छन्दसाघमर्षणेति त्रयः । ( कर्मध्यादयः सप्त ७ मात्स्योक्ताः, इत्यन्येऽपि धनञ्जयाः ) ।

**अघमर्षणाः ८**-एषां-वैश्वामित्राघमर्षणकौशिकेति त्रयः ।

**पूरणाः ९**-एषां वैश्वामित्रपौरणेति द्वौ वा-वैश्वामित्रदेवरातपौरणेति त्रयः ।

**इन्द्रकौशिकाः १०**-एषां-वैश्वामित्रेन्द्रकौशिकेति द्वौ ।

एते १० **बोधायनोक्ता** बोध्याः ।

**रौहिणाः १**-एषां-वैश्वामित्र माधुच्छन्दस रौहिणेति त्रयः ।

**रेणवः २**-एषां-वैश्वामित्रगाथिन रैणवेति त्रयः ।

**वेणवः ३**-एषां-वैश्वामित्रगाथिनवैणवेति त्रयः ।

**जह्नवः ४**-एषां-वैश्वामित्रशालङ्कायनकौशिकेति त्रयः ।

**आश्मरथ्याः ५**-एषां वैश्वामित्राश्मरथ्यवाधूलेति त्रयः ।

**उदवेणवः ६**-एषां-वैश्वामित्र गाथिनवैणवेति त्रयः ।

एते षट् **आश्वलायनमात्स्योक्ताः** ।

एषां विश्वामित्राणां मिथो विवाहो न भवति । अत्र यद्यपि अत्रेरेवाऽपरं वंशं तव वक्ष्यामि पार्थिव ।

अत्रेस्सोमस्सुतः श्रीमांस्तस्य वंशोद्भवो नृपः ॥
विश्वामित्रस्सुतपसा ब्राह्मण्यं समवाप्तवान् ।"

इति मात्स्योक्तेः विश्वामित्रस्यात्रिवंशत्वेन परस्परमविवाहः प्रतीयते, तथापि द्वयोर्भिन्नगोत्रत्वश्रवणाद्विवाहो ज्ञेयः । अन्यथा विश्वामित्रत्वेन निषेधो व्यर्थ एव स्यात्, अत्रिगोत्रत्वेनैव निषेधसिद्धेरिति कुशकासावलम्बनेन समाधेयमिति प्रवरदर्पणे ।

अथ कश्यपाः । ते पञ्च । निध्रुवाः । कश्यपाः । शाण्डिलाः । रैभाः । लौगाक्षयश्च । निध्रुवाणां काश्यपावत्सारनैध्रुवेति । काश्यपानां काश्यपावत्साराऽसितेति । रैभाणां कश्यापावत्साररैभ्येति । शाण्डिलानां काश्यपशाण्डिल्येति । अन्त्यस्थाने देवलो वा सितो वा शाण्डिलासितदेवलेति वा कश्यपासितदेवलेति वा अन्त्ययोर्व्यत्ययो वा । देवलासितेति द्वौ वा । लौगाक्षीन् वक्ष्यामः । एषां कश्यपानामविवाहः ।

**कश्यपाः पञ्च ५ ।**

**निध्रुवाः१**–छाङ्गरिमठरैतिशायनादयो नवति९० र्निध्रुवाः । तेषां–काश्यपावत्सारनैध्रुवेति त्रयः । ( कात्या० आग्रायणादयः सप्तचत्वारिंशत्४७, मात्स्योक्ता भवनन्द्यादयोऽष्टाविंशतिः२८, स्वापशान्तादयः षोडश१६ इति केचित्, इत्यन्येऽपि निध्रुवाः ) ।

**कश्यपाः२**–एषां–काश्यपवत्साराऽसितेति त्रयः ।

**रैभाः३**–एषां–काश्यपवत्साररैभ्येति त्रयः ।

**शाण्डिल्याः४**–कोहलपाचकवापिकादय एकत्रिंशत्३१ शाण्डिल्याः । तेषां–काश्यपावत्सारशाण्डिल्येति त्रयः । वा–काश्यपावत्सारदेवलेति । वा–काश्यपावत्साराऽसितेति । वा–शाण्डिलासितदेवलेति त्रयः । वा–काश्यपासितदेवलेति । वा–अन्त्ययोर्विपर्यासः । वा–देवलासितेति द्वौ । ( कात्या० सम्पचादयः पञ्चविंशतिः२५ मात्स्योक्ताः सम्पात्यादयश्चतुर्दश१४, जावंशादयो दश१० इति केचित्, इत्यन्येऽपि शाण्डिल्याः ) ।

**लौगाक्षयः५**–इमान्द्विगोत्रिष्वग्रेऽभिधास्यामः ।

अथ वसिष्ठाः । ते पञ्च वसिष्ठाः । कुण्डिनाः । उपमन्यवः । पराशराः । जातूकर्ण्याश्चेति । वसिष्ठानां वासिष्ठेन्द्रप्रमदाभरद्वस्विति । वासिष्ठेत्येको वा । कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्येति । उपमन्यूनां वासिष्ठेन्द्रप्रमदाभरद्वसव्येति । वासिष्ठाभरद्वस्विन्द्रप्रमदेति वा । आद्ययोर्व्यत्ययो वा । पराशराणां वासिष्ठशाक्त्यपाराशर्येति । जातूकर्ण्यानां वासिष्ठात्रिजातूकर्ण्येति वासिष्ठानां सर्वेषामविवाहः । अन्त्यस्यात्रिभिश्च ।

**वसिष्ठाः पञ्च ५ ।**

**वसिष्ठाः** १—वैतालकिहराकिसावखादयस्त्रयस्त्रिंशत् ३३ वसिष्ठाः । तेषां—वसिष्ठेन्द्रप्रमदाभरद्वस्विति त्रयः । वा—वसिष्ठेत्येकः । ( औपवतादय एकोनत्रिंशत् २९ कात्यायनोक्ताः, वैष्णव्यादयश्चतुर्दश १४ मात्स्योक्ताः, रावण्यादयः षट् ६ इति केचित्, इत्यन्येऽपि वसिष्ठाः ) ।

**कुण्डिनाः** २—लोहितायनगुग्गुल्यादयो विंशतिः २० कुण्डिनाः । तेषां—वासिष्ठमैत्रावरुणकौंडिन्येति त्रयः । ( औपस्वस्थादयो नव ९ इति कातीयाः, पालोहगोपनाविति कश्चित्, इत्यन्येपि कुण्डिनाः ) ।

**उपमन्यवः** ३—उपगवमाण्डलेखिकापिञ्जलादयो द्वाविंशति २२ रुपमन्यवः । तेषां—वासिष्ठेन्द्रप्रमदाभरद्वास्विति त्रयः । वा—वासिष्ठभरद्वास्विन्द्रप्रमदेति त्रयः । वा—आद्ययोर्व्यत्यासः । ( शैलाल्यादयः षड्विंशतिः २६ इति कातीयाः, महाकण्वादयो विंशति २० र्मात्स्योक्ताः, रास्फेयादयः सप्तदश १७ इति कश्चित् इत्यन्येऽप्युपमन्यवः ) ।

**पराशराः** ४—कण्डुशिवाजिवाजिमत्यादयस्त्रिंशत् ३० पराशराः । तेषां—वासिष्ठशात्त्यपाराशर्येति त्रयः । ( वांहन्यादयो विंशतिः २० इति लौगाक्षिसूत्रे, पार्थिवादयो दश १० इति कश्चित् इत्यन्येऽपि पराशराः ) ।

**जातूकर्ण्याः** ५—एषां—वसिष्ठात्रिजातूकर्ण्येति त्रयः । वासिष्ठानां न मिथो विवाहः । जातूकर्ण्यस्यात्रिभिरपि ।

**अथागस्त्याः । ते चत्वारः । इध्मवाहाः । साम्भवाहाः । सोमवाहाः । यज्ञवाहाश्चेति । आद्यानां आगस्त्यदार्ढ्यच्युतेध्मवाहेति । आगस्त्येत्येको वा । सोमवाहानां आगस्त्यदार्ढ्यच्युतसोमवाहेति । साम्भवाहानां साम्भवाहोन्त्यः । यज्ञवाहानां यज्ञवाहोऽन्त्यः । आद्यौ पूर्वोक्तावेव । सारवाहानां तदन्तास्त्रयः दर्भवाहानां तदन्तास्त्रयः । अगस्तीनामागस्त्यमाहेन्द्रमायोभुवेति । पूर्णमासानामागस्त्यपौर्णमासपारणेति । हिमोदकानाम् । आगस्त्यहैमवर्चिहैमोदकेति । पाणिकानामागस्त्यपैनायकपाणिकेति । एते षट् क्वचित् । अगस्तीनां सर्वेषामविवाहः ॥**

**अगस्त्याश्चत्वारः ४—**

**इध्मवाहाः** १—विशालाद्यखलायनौपदहन्यादयः सप्तदश १७ इध्मवाहाः । तेषाम्—आगस्त्यदार्ढ्यच्युतेध्मवाहेति त्रयः । वा—आगस्त्येत्येकः । ( कात्या० उपकुलादयः पञ्चदश १५, सैवकादय एकोनत्रिंशत् २९ इति कश्चित्, इत्यन्येऽपीध्मवाहाः ) ।

**साम्भवाहाः** २—एषाम्—आगस्त्यदार्ढ्यच्युतसाम्भवाहेति त्रयः ।

**सोमवाहाः३**–एषाम्–आगस्त्यदार्ढ्यच्युतसोमवाहेति त्रयः ।
**यज्ञवाहाः४**–एषाम्–आगस्त्यदार्ढ्यच्युतयज्ञवाहेति त्रयः ।

---

**सारवाहाः१**–एषाम्–आगस्त्यदार्ढ्यच्युतसारवाहेति त्रयः ।
**दर्भवाहाः२**–एषाम्–आगस्त्यदार्ढ्यच्युतदर्भवाहेति त्रयः ।
**अगस्तयः३**–एषाम्–आगस्त्यमाहेन्द्रमायोभुवेति त्रयः ।
**पूर्णमासाः४**–एषाम्–आगस्त्यपौर्णमासपारणेति त्रयः ।
**हिमोदकाः५**–एषाम्–आगस्त्यहैमवर्चिहैमोदकेति त्रयः ।
**पाणिकाः६**–एषाम्–आगस्त्यपैनायकपाणिकेति त्रयः ।

**एते षड्गणाः कुत्रचित् ।**

यद्यपि मात्स्ये वसिष्ठागस्त्ययोर्मित्रावरुणगोत्पन्नत्वेन द्वयोर्भ्रातृत्वात्परस्परमविवाहः प्राप्नोति, तथापि भिन्नगोत्रत्वस्मरणादेव विवाहो भवति । अन्यथाऽन्यतरगोत्रनिषेधेनैव सिद्धेरितरगोत्रनिषेधा व्यर्थ एव स्यादित्युक्तमेव प्रागिति ।

---

अथ द्विगोत्राः । शौङ्गशैशिरीणाम् आङ्गिरसबार्हस्पत्यभारद्वाजकात्याक्षीलेति पञ्च। कात्याक्षीलयोः स्थाने शौङ्गशैशिरी वा । आङ्गिरसकात्याक्षीलेति त्रयो वा एषां भरद्वाजैर्विश्वामित्रैश्चाविवाहः । एवं कपिलानां कतानां च संकृतिपूतिमाषादीनामाङ्गिरस, गौरिवीतसांकृत्येति । शाक्त्यगौरिवीतसाङ्कृत्येति वा एषां स्वगणस्थैर्वसिष्ठैः शौङ्गशैशिरलौगाक्षिभिश्चाविवाहः । कश्यपैरपीति **प्रयोगपारिजाते** । लौगाक्षीणां काश्यपावत्सारवासिष्ठेति। काश्यपावत्साराासितेति वा । एतेहर्वसिष्ठा नक्तं कश्यपाः । एषां वसिष्ठैः कश्यपैः संकृतााद्यैश्चाविवाहः। देवरातस्य जामदग्न्यैर्विश्वामित्रैश्चाविवाह इति **प्रयोगपारिजाते** । तदयुक्तम् । बह्वृचश्रुतौ । 'यथैवांगिरसः सन्नुपेयां तव पुत्रताम् । आंगिरसो जन्मनास्याजीगर्तिः श्रुतः कविः, । इत्यङ्गिरोगणस्थत्वेन भार्गवजामदग्न्यत्वस्मृतेर्बाधात् । तेन प्रत्यक्षश्रुत्या हरिवंशादिस्मृतेश्च बाधात् । तेन द्वौ देवरातौ । एक आङ्गिरसः श्रुत्युक्तः । अन्यो भार्गवः तयोः कल्पभेदेप्याङ्गिरसेन देवरातेन जामदग्न्यैर्भवत्येव विवाहः । भार्गवेण तु नेति तत्त्वम् । धनञ्जयानां विश्वामित्रैरत्रिभिश्चाविवाहः । जातूकर्ण्यानां वसिष्ठैरत्रिभिश्चाविवाहः । एवं दत्तक्रीतकृत्रिमस्वयन्दत्तपुत्रिकापुत्रादीनाम् उत्पादकपालकयोः पित्रोर्गोत्रप्रवरा वर्ज्या इति **प्रवरमञ्जरीनारायणवृत्तिप्रयोगपारिजातादयः** । अत्र सर्वत्रोपपत्तयः । मूलं च मत्कृते **प्रवरदर्पणे** ज्ञेयमिति दिक् ॥

क्षत्रियवैश्ययोस्तु पुरोहितगोत्रप्रवरावेवेति सर्वसिद्धान्तः । यद्यपि बह्वृचपरिशिष्टे कपिभरद्वाजयोर्विवाह उक्तस्तथापि 'भरद्वाजश्च कपयो गर्गा रौक्षायणा इति । चत्वारोपि भरद्वाजगोत्रैक्यान्नान्वयुर्मिथः । कपिगर्गभरद्वाजा मिथो रौक्षायणा द्विजाः ॥ नोद्वहेयुः सगोत्रत्वात्प्रवरैक्याच्च कुत्रचित्' । इति **स्मृत्यर्थसारा**द्युक्तेरविवाह एव तयोरिति ।

प्रवरमञ्जर्यां यद्यपीदमुक्तं तथापि भृग्वंगिरोगणेषु भवत्येव । तथा बह्वृचपरिशिष्टे बौधायनः—'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वमृते भृग्वंगिरोगणात्' ॥ माधवीये स्मृत्यन्तरे—'पञ्चानां तु त्रिसामान्यादविवाहस्त्रिषु द्वयोः । भृग्वंगिरोगणेष्वेवं शेषेष्वेकोपि वारयेत् ॥' इति देशाचाराच्च । सोप्याभीरदेशे प्रसिद्धः । चतुर्विंशतिमते—'यस्तु देशानुरूपेण कुलमार्गेण चोद्वहेत् । नित्यं स व्यवहार्यः स्याद्वेदाच्चैतत्प्रदृश्यते'॥इति दिक् । तथा च भृगुः—'यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेपि वा । यो यत्र विहितो धर्मस्तं धर्मं न विचालयेत् ॥' इति । पुनश्चतुर्विंशतिमते—'यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः । वर्णानां किल सर्वेषां सदाचारः स उच्यते' ॥

स्वगोत्राद्यज्ञाने तु सत्याषाढः—'अथाज्ञानबन्धोः पुरोहितप्रवरेणाचार्यप्रवरेण वेति' ॥ 'आचार्यगोत्रप्रवरानभिज्ञस्तु द्विजः स्वयम् । दत्त्वात्मानं तु कस्मै चित्तद्गोत्रप्रवरो भवेत् ॥' यद्वा स्वगोत्रप्रवरविधुरो जामदग्निजः । विवाहं च न तेनैव गोत्रेण तु समाचरेत्' ॥ इति कश्चित् । दिवोदासीयेपि—'स्वगोत्रप्रवराज्ञाने जमदग्निमुपाश्रयेत्' ।

अथ मातृगोत्रवर्जननिर्णयः। शातातपः—'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव गत्वा चान्द्रायणं चरेत्'॥यद्यपि'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि।जन्मनाम्नोरविज्ञातेप्युद्वहेदविशंकितः॥'इति व्यासोक्तेरज्ञातनामत्वेन सगोत्रत्वदोषस्तथापि नेदं कलौ प्रवर्त्तते॥'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा' इति कलिवर्ज्योक्तेः । इदं मातृगोत्रवर्जनं माध्यन्दिनीयानामेव । 'मातृगोत्रं माध्यन्दिनीयानामपुत्रायाश्च' इति सत्याषाढोक्तेरिति कश्चिन्महाराष्ट्रकल्पितं तन्निर्मूलम् । अन्यथा गुर्जरादेः कातीयस्य कुतो न निषेधः । अत एव प्रवरमञ्जरीकारः—'दोषस्यातिगुरुत्वात् सर्वेषां मातृगोत्रं वर्ज्यम् ।' इति । यत्तु गुर्जरादीनां माध्यन्दिनीयानामप्याचरणाच्च । 'एकस्मिन् प्रवरे तुल्ये मातृगोत्रे वरस्य च । तमुद्वाहं न कुर्वीत सा कन्या भगिनी स्मृता इति मातृकुले प्रवरचिंतनमुक्तम् । तदासुरादिविवाहोढापरमिति दिक् विस्तरस्तु ग्रन्थान्तरेभ्यो ज्ञेयः ॥

सगोत्रविवाहे प्रायश्चित्तम्।

सगोत्रादिविवाहे प्रायश्चित्तं स्मृत्यर्थसारे—'इत्थं सगोत्रसंबन्धविवाहविषये स्थिते । यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति ॥ गुरुतल्पव्रताच्छुध्येद्गर्भस्तज्जोऽन्त्यतां व्रजेत । भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥ अज्ञानादैन्दवैः शुद्ध्येत्रिभिर्गर्भस्तु काश्यपः ॥ एवं सापिण्ड्येपि । 'सपिण्डापत्यदारेषु प्राणत्यागो विधीयते' इति बृहद्यमोक्तेः । तिथितत्त्वे बौधायनः । 'सपिण्डां सगोत्रां चेदमत्योपयच्छेन्मातृवदेनां बिभृयात' ॥

कन्याविवाहकालः ।

कन्याविवाहकाल उक्तो ज्योतिर्निबन्धे-'षडब्दमध्ये नोद्वाह्या कन्यावर्षद्वयं यतः । सोमो भुंक्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः' ॥ राजमार्त्तण्डः-'अयुग्मे दुर्भगा नारी युग्मे तु विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता॥मासत्रयादूर्ध्वमयुग्मवर्षे युग्मेपि मासत्रयमेव यावत् । विवाहशुद्धिं प्रवदन्ति सन्तो वात्स्यादयः स्त्रीजनिजन्ममासात्' ॥ पराशरमाधवीये तु-'जन्मतो गर्भाधानाद्वा पञ्चमाब्दात् परं शुभम् । कुमारीवरणं दानं मेखलाबन्धनं तथा' इत्युक्तम् । सम्बन्धतत्त्वे यमः-'कन्याद्वादशवर्षाणि या प्रदत्ता वसेद्गृहे । ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम्'॥ भारते-'त्रिंशद्वर्षः षोडशाब्दां भार्यां विन्देत नग्निकाम् । दशवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः । अतो प्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्' ॥ तत्रैव-'सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः' ॥ राजमार्त्तण्डः-'राहुग्रस्ते तथा शुद्धे पितॄणां प्राणसंशये । अतिप्रौढा च या कन्या चन्द्रलग्नबलेन तु' ॥ चकारादतिबाला । प्राणसंशय इत्युक्तेः । मनुः-'त्रिंशद्वर्षो वहेत्कन्यां कृत्वा द्वादशवार्षिकीम् । द्व्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः' । यद्यपि 'विवाहस्त्वष्टवर्षायाः कन्यायाः शस्यते बुधैः' इति संवर्त्तोक्तेः । 'अत ऊर्ध्वं रजस्वला' इत्यादेश्च दशवर्षादूर्ध्वं विवाहो निषिद्धस्तथापि दातुरभावे द्वादशषोडशाब्दे ज्ञेये । 'त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।' इति पराशरमाधवीये बौधायनोक्तेश्च॥ मनुः-'स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् । हीनक्रियं निःपुरुषं निच्छन्दोरोमशार्शसम् ॥ क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च । नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ॥ न पक्ष्यहिप्रेष्यनाम्नीं न बिभीषणनामिकाम्' ॥ यमः-'तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत्' । तथा मूलजादीनां फलं प्रागुक्तम् । तथा वर्णवश्यग्रहमैत्र्यादिघटितविचारो ज्योतिर्विद्भ्यो ज्ञेयः । विस्तरात्तु नोच्यते ।

गुर्वर्कबलम् ।

अथ गुर्वर्कबलम् । ज्योतिर्निबन्धे गर्गः-'स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् । तयोश्चन्द्रबलं श्रेष्ठमिति गर्गेण भाषितम् ॥ जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ॥ विवाहेऽथ चतुर्थाष्टद्वादशस्थो मृतिप्रदः' देवलः-'नष्टात्मजा धनवती विधवा कुशीला पुत्रान्विता हतधवा सुभगा विपुत्रा स्वामिप्रिया विगतपुत्रधवा धनाढ्या वन्ध्या भवेत्सुरगुरौ क्रमशोभिजन्मा' ॥ बृहस्पतिः-'झषचापकुलीरस्थो जीवोप्यशुभगोचरः ॥ अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥' लल्लः-'द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च । प्राप्ते पाणि-

१-'व्यञ्जनैस्तु समुत्पन्नैः सोमो भुंजीत कन्यकाम् । पयोधरैस्तु गंधर्वा रजसाग्निः प्रकीर्तितः ॥ तस्माद्व्यञ्जनोपेतामरजामपयोधराम् । अभुक्ता चैव सोमाद्यैः कन्यका तु प्रशस्यते ॥ इति तु गृह्यसंग्रहे उक्तम् । तुरीयस्ते मनुष्यजाः इति' श्रुतिविरुद्धम् ।

ग्रहणे जीवे वैधव्यमाप्नोति' ॥ गर्गः 'सर्वत्रापि शुभं दद्याद्द्वादशाब्दात् परं गुरुः । पञ्चषष्ठाब्दयोरेव शुभगोचरता मता ॥ सप्तमात् पञ्चवर्षेषु स्वोच्चस्वर्क्षगतो यदि । अशुभोपि शुभं दद्याच्छुभर्क्षेषु किं पुनः ॥ रजस्वलायाः कन्याया गुरुशुद्धिं न चिन्तयेत् । अष्टमेपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥ अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता । कन्या चन्द्रबला प्रोक्ता वृषली लग्नतोबला ॥ अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी । दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला' ॥

अथ बृहस्पतिशान्तिः । शौनकः—'कन्यकोद्वाहकाले तु आनुकूल्यं न विद्यते । ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः ॥ सुवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत् । ईशान्यां धवलं कुम्भं धान्योपरि निधाय च ॥ दमनं मधुपुष्पं च पलाशं चैव सर्षपान् । मांसी गुडूच्यपामार्गी विडंगी शंखिनी वचा ॥ सहदेवी हरिक्रान्ता सर्वौषधिशतावरी । बला च सहदेवी च निशाद्वितयमेव च ॥ कृत्वाज्यभागपर्यन्तं स्वशाखोक्तविधानतः । ग्रहोक्तमण्डलेभ्यर्च्य पीतपुष्पाक्षतादिभिः ॥ देवपूजोत्तरे काले ततः कुम्भानुमन्त्रणम् । अश्वत्थसमिधश्चाज्यं पायसं सर्पिषा युतम् ॥ यवव्रीहितिलाः साज्या मन्त्रेणैव बृहस्पतेः । अष्टोत्तरशतं सर्वं होमशेषं समापयेत् ॥ पुत्रदारसमेतस्य अभिषेकं समाचरेत् । कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रतः ॥ प्रतिमां कुम्भवस्त्रं च आचार्याय निवेदयेत् । ब्राह्मणान् भोजयेत्पश्चाच्छुभदः स्यान्न संशयः' ॥ इति बृहस्पतिशान्तिः ॥

बृहस्पतिशान्तिः ।

शौनकः—'गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ । नष्टे शशिनि शुक्रे वा बाले वृद्धेथ वा गुरौ ॥ पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके । केतूद्गमे निरंशेर्के सिंहस्थेमरमन्त्रिणि ॥ विवाहव्रतयात्रादिपुरहर्म्यगृहादिकम् ॥ क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत्॥' मदनपारिजाते ज्योतिःसागरे—'बाले शुक्रे वृद्धे शुक्रे वृद्धे जीवे नष्टे जीवे।बाले जीवे जीवे सिंहे सिंहादित्ये जीवादित्ये॥तथा मलिम्लुचे मासि सुराचार्येतिचारगे ॥ वापीकूपविवाहादिक्रियाः प्रागुदितास्त्यजेत् ॥ सिंहस्थं मकरस्थश्च गुरुं यत्नेन वर्जयेत्' ॥ लल्लः—'अतिचारगतो जीवस्तं राशिं नैव चेत् पुनः । लुप्तः संवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥' सिंहस्थगुरोरपवादमाह पराशरः—'गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ । मघास्थे सर्वदेशेषु तथा मीनगते रवौ' ॥ वसिष्ठोपि—'विवाहो दक्षिणे कूले गौतम्यां नेतरत्र तु । भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥ विवाहो व्रतबन्धश्च सिंहस्थेज्येन दुष्यति' ॥ कन्यादातृक्रममाह

सिंहस्थगुरौ ।

---

१—अप्राप्तरजसा गौरी प्राप्ते रजसि रोहिणी । अव्यञ्जिता भवेत्कन्या कुचहीना तु नग्निका ॥ इति गृह्यसंग्रहोक्तमपि बोध्यम् ।

कन्यादातारः ।

याज्ञवल्क्यः–'पिता पितामहो भ्राता सकुल्यो जननी तथा । कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥ अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ । गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम्' ॥ भ्रातॄणां संस्कृतानामेवाधिकारमाह स एव–'असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम्' ॥ अत्र चकारेण पूर्वसंस्कृतैरित्यस्यानुवृत्तेर्विवाहपर्याप्तद्रव्यदाने स्वांशसमांशचतुर्थभागदाने वा संस्कृतग्रहणं व्यर्थं स्यात्, अतः कर्तृनियमोयम् । तेनानुपनीतभ्रातृमात्रादिसत्त्वे मात्रादेरेवाधिकारो न भ्रातुरित्युक्तं संबन्धतत्त्वादौ । कन्यास्वयंवरे मातुर्दातृत्वे च ताभ्यामेव नान्दीश्राद्धं कार्यम् । तत्र च स्वयं प्रधानसंकल्पमात्रं कृत्वाऽन्यब्राह्मणद्वारा कारयेदिति प्रयोगपारिजाते । वरस्तु संस्कृतभ्रात्राद्यभावे स्वयमेव नान्दीश्राद्धं कुर्यात् न माता । 'पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ।' इति निषेधात् । उपनयनेन कर्माधिकारस्य जातत्वाच्चेति पृथ्वीचन्द्रोदये । माधवीयेऽपरार्के च नारदः–'पिता दद्यात्स्वयं कन्यां भ्राता वानुमते पितुः । मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥ माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते । तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥ सकुल्यः पितृपक्षीयो बान्धवो मातृवंशजः' ॥ मदनपारिजाते कात्यायनः–'स्वयमेवौरसीं दद्यात्पित्रभावे स्वबान्धवः । मातामहस्ततोन्यां हि माता वा धर्मजां सुताम्' ॥ ततोन्यामौरसीभिन्नां धर्मजां नियोगाद् क्षेत्रजां मातामहो माता मातुलो वा दद्यात् । तेनौरसीदाने पितृबन्धुषु सत्सु मातामहादीनां नाधिकारः अनुमतिं विना । अस्यापवादस्तत्रैव–'दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु । माता तु समये दद्यादौरसीमपि कन्यकाम्' ॥ मनुः–'यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत्' ॥

परकीयकन्यादाने विशेषो मदनरत्ने स्कान्दे–'आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम् । धर्मेण विधिना दानमसगोत्रेपि युज्यते' ॥ अत्र प्रकृतिग्रहणादप्रकृतिस्थेन कृतमकृतमेव । 'स्वतन्त्रो यदि तत्कार्यं कुर्यादप्रकृतिं गतः । तदप्यकृतमेव स्यादस्वातन्त्र्यस्य हेतुतः' ॥ इत्यपरार्के नारदोक्तेः । यदि तु सप्तपदीविवाहहोमादिप्रधानं जातं तदङ्गवैकल्येपि नावृत्तिर्विवाहस्य । गौडा अप्येवमाहुः । तत्रैव मरीचिः–'गौरीं ददन्नाकपृष्ठे वैकुण्ठं रोहिणीं ददत् । कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम्' ॥

विवाहे मासनिर्णयः ।

अथ मासनिर्णयः । तत्र जन्ममासे विशेषः प्रागुक्तः । ज्योतिःप्रकाशे व्यासः–'माघफाल्गुनवैशाखे यदूढा मार्गशीर्षके । ज्येष्ठे वाषाढमासे च सुभगा वित्तसंयुता ॥ श्रावणे वापि पौषे वा कन्या भाद्र-

---

इदं तु 'लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ।' इति पूर्वपक्षे 'जातिं तु बादरायणोऽविशेषात् । तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' इति सिद्धान्तसूत्रविरुद्धम् ॥

पदे तथा । चैत्राश्वयुक्कार्त्तिकेषु याति वैधव्यतां लघु ॥' नारदः-'माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । कार्तिको मार्गशीर्षश्च मध्यमौ निन्दिताः परे' ॥ वसिष्ठः-'पौषेपि कुर्यान्मकरस्थितेर्के चैत्रे भवेन्मेषगतो यदा स्यात् । प्रशस्तमाषाढकृतं विवाहं वदन्ति गर्गा मिथुनस्थितेर्के' ॥ आचार्यचूडामणौ ज्योतिर्गर्गराजमार्तण्डौ-'माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च । दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥ आपस्तम्बः-'सर्व ऋतवो विवाहस्य । शैशिरौ मासौ परिहार्य्योत्तमं च नैदाघम्' । अत्र माघफाल्गुनाषाढवर्जा नव मासा मुख्यः कालः।' इति सुदर्शनभाष्येडविलायां ब्रह्मविद्यातीर्थैश्चोक्तम् । बौधायनसूत्रेपि-'सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्जम्' इत्येके । तेन पूर्वोत्तरौ शिशिरसम्बन्धिनौ मासौ पौषचैत्रौ विहाय इति । निर्णयामृतव्याख्यानं मौर्ख्यकृतमित्युपेक्ष्यम् । निशि चेत्सर्वेषु द्वादशस्वपि मासेषूद्वहेदिति कालादर्शः । ये तु ज्योतिषे माघादिविषयस्ते गृह्यसूत्राणां द्विजपरत्वेन प्राबल्याच्छूद्रादिपराः । ज्योतिषे-'वात्स्यो वर्षमनूनमिच्छति तथा रैभ्योयनं चोत्तरं श्रीवासन्तमृतुं विहाय मुनयो माण्डव्यशिष्या जगुः । चैत्रं प्रोज्झ्य पराशरः परिणयेत्पौषं च दौर्भाग्यदं ह्याषाढादिचतुष्टयं न निनदं कैश्चित् प्रदिष्टं बुधैः ॥' चण्डेश्वरः-'मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् । ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥ कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत् । उत्सवादिषु कार्येषु दिनानि दश वर्जयेत् ॥' रत्नकोशे-'जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत् । ज्येष्ठे मास्याद्यगर्भस्य शुभं वर्ज्यं स्त्रिया अपि ॥' पराशरः-'अज्येष्ठा कन्यका यत्र ज्येष्ठपुत्रो वरो यदि । व्यत्ययो वा तयोस्तत्र ज्येष्ठमासः शुभप्रदः ॥' मिहिरः-'ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते ॥ द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं शुभावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् ॥' यत्तु-'सार्वकालमेके विवाहम्' इति तदासुरादिविवाहविषयम् । 'धर्म्येषु विवाहेषु कालपरीक्षणं नाधर्म्येषु' इति गृह्यपरिशिष्टात् । रत्नमालायामप्येवम् ॥ तेनासुरादयो माघचैत्रादिनिषिद्धकालेष्वपि भवन्ति । मासाः सौराः । 'सौरो मासो विवाहादौ' इत्युक्तेः । 'झषो न निन्द्यो यदि फाल्गुने स्यादजस्तु वैशाखगतो न निन्द्यः ।' इति त्वपवादः ॥

अथ दशदोषाः । व्यवहारोच्चये-'वेधश्च लत्ता च तथैव पातः खर्जूरवेधो दशयोगचक्रम् । युतिश्च जामित्रमुपग्रहश्च बाणाख्यवज्रे च दशैव दोषाः' ॥ एषां लक्षणं ज्योतिषे ज्ञेयम् । अतिचारगे गुरौ तु वसिष्ठः-'अति चारगते जीवे वर्जयेत्तदनन्तरम् । विवाहादिषु कार्येषु अष्टाविंशतिवासरान् ॥' रत्नमालायाम्-'एकपञ्चनवयुग्मषड्दशत्रीणि सप्तचतुरष्टलाभगः । द्वादशाजवृषभादिराशितो घातचन्द्र इति कीर्तितो बुधैः॥' नारदः-'भूबाणनन्दहस्ताश्च रसदिग्वह्निशैलजाः।वेदा वसुशिवादित्या घातचन्द्रो

यथाक्रमम् ॥ यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् । विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ॥ घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत्॥'ज्योतिर्निबन्धे–विवाहचौलव्रतबन्धयज्ञे पट्टाभिषेके च तथैव राज्ञाम् । सीमन्तयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः ॥' नारदः–'अकालजा भवेयुश्चेद्विद्युन्नीहारवृष्टयः । प्रत्यर्कपरिवेषेन्द्रचापाभ्रध्वनयो यदि ॥ दोषाय मंगले नूनं न दोषायैव कालजाः ॥' अकालवृष्टिस्वरूपमाह लल्लः–'पौषादिचतुरो मासाः प्रोक्ता वृष्टिरकालजा ।' इति । शार्ङ्गधरः–'निर्घाते क्षितिचलने ग्रहयुद्धे राहुदर्शने चैव । आ पञ्चदिनात्कन्या परिणीता नाशमुपयाति ॥ उल्कापातेन्द्रचापप्रबलघनरजोधूमनिर्घातविद्युद्दृष्टिप्रत्यर्कदोषादिषु सकलबुधैस्त्याज्यमेवैकरात्रम् । दुःस्वप्ने दुर्निमित्ते ह्यशुभफलदृशो दुर्मनोभ्रान्तबुद्धौ चौले मौञ्जीनिबन्धे परिणयनविधौ सर्वदा त्याज्यमेव' ॥ ज्योतिःप्रकाशे–'अर्वाक्षोडशनाड्यः संक्रान्तेः पुण्यदाः परतः । उपनयनव्रतयात्रापरिणयनादौ विवर्ज्यास्ताः' ॥ गर्गः–'दिग्दाहे दिनमेकं च ग्रहे सप्तदिनानि तु । भूकम्पे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ॥ उल्कापात त्रिदिवसं धूमे पञ्च दिनानि च । वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु ॥ दर्शनादर्शनाद्राहुकेत्वोः सप्तदिनं त्यजेत् । यावत्केतूद्गमस्तावदशुभः समयो भवेत् ॥' अस्यापवादोऽद्भुतसागरे–'अथ दिवसत्रयमध्ये मृदु पानीयं यदा भवति।उत्पातदोषशमनं तदेव संप्राहुराचार्याः'॥ संबन्धतत्त्वे–'भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते सति'॥अथापारिहार्ये कन्यावैधव्ययोगे विशेष उच्यते । मार्कण्डेयपुराणे–'बालवैधव्ययोगे तु कुम्भद्रुप्रतिमादिभिः । कृत्वा लग्नं ततः पश्चात्कन्योद्वाह्येति चापरे' ॥ अत्र पुनर्दोषाभाव उक्तो विधानखण्डे–'स्वर्णाम्बुपिप्पलानां च प्रतिमाविष्णुरूपिणी । तया सह विवाहे तु पुनर्भूत्वं न जायते'॥ सूर्यारुणसंवादे–'विवाहात्पूर्वकाले च चन्द्रतारावलान्विते । विवाहोक्ते च तां कन्यां कुम्भेन सह चोद्वहेत् ॥ सूत्रेण वेष्टयेत्पश्चाद्दशतन्तुविधानतः ॥ कुंकुमालंकृतं देहं तयोरेकान्तमन्दिरे ॥ ततः कुम्भं च निःसार्य प्रभज्य सलिलाशये ॥ ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः' ॥ कुम्भप्रार्थना तत्रैव–'वरुणांगस्वरूपाय जीवनानां समाश्रय । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ देहि विष्णो वरं देव कन्यां पालय दुःखतः । ततोऽलंकारवस्त्राढ्यां वराय प्रतिपादयेत्' ॥ इति कुम्भविवाहः ॥

दुष्टयोगे कुम्भविवाहः ।

मूर्तिदानमपि तत्रैवोक्तम् ॥ 'ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः । तस्मै दद्याद्विधानेन विष्णोर्मूर्तिं चतुर्भुजाम् ॥ शुद्धवर्णसुवर्णेन वित्तशक्त्याथ वा पुनः । निर्मितां रुचिरां शंखगदाचक्राब्जसंयुताम् ॥ दधानां वाससी पीते कुमुदोत्पलमालिनीम् । सदक्षिणां च तां दद्यान्मन्त्रमेनमुदीरयेत् ॥ यन्मया प्राचि जनुषि घ्नन्त्या पतिसमागमम् । विषोपविषशस्त्राद्यैर्हतो वातिविरक्तया ॥ प्राप्यमाणं महाघोरं यशःसौख्यधनाप-

हम् । वैधव्याद्यतिदुःखौघनाशाय शुभलब्धये ॥ बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् । सौवर्णीं निर्मितां शक्त्या तुभ्यं संप्रददे द्विज ॥ अनघाद्याहमस्मीति त्रिवारं प्रजपेदिति । एवमस्त्वित तस्योक्तिं गृहीत्वा स्वगृहं विशेत् ॥ ततो वैवाहिकं कुर्याद्विधिं दाता मृगीदृशः'॥ अन्येप्यश्वत्थविवाहवृक्षसेचनादयस्तत्रैव ज्ञेयाः । विस्तरभयान्नोच्यन्ते ॥

अथ प्रतिकूलादि ज्योतिर्निबन्धे गर्गः–'कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् ॥ तदा न मंगलं कुर्यात् कृते वैधव्यमाप्नुयात्' ॥ ज्योतिर्मेधातिथिः–'वधूवरार्थेघटिते सुनिश्चिते वरस्य गेहेप्यथ कन्यकायाः॥ मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः' ॥ मङ्गलं विवाहः । स्मृतिचन्द्रिकायाम्–'कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः॥तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम्' ॥ भृगुः–'वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ॥ तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः'॥ शौनकः–'वरवध्वोः पिता माता पितृव्यश्च सहोदरः। एतेषां प्रतिकूलं च महाविघ्नप्रदं भवेत् ॥ पिता पितामहश्चैव माता चैव पितामही ॥ पितृव्यस्त्रीसुतो भ्राता भगिनी चाविवाहिता ॥ एभिरत्र विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् । अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्' ॥ माण्डव्यः–'वाग्दानानन्तरं माता पिता भ्राता विपद्यते । विवाहो नैव कर्तव्यः स्वस्वंशस्थितिमिच्छता' ॥

प्रतिकूलादि ।

संकटे तु मेधातिथिः–'वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत्' ॥ स्मृतिरत्नावल्याम्–'पितुरब्दमशौचं स्यात्तदर्धं मातुरेव च ॥ मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥ अन्येषां तु सपिण्डानामाशौचं मासमीरितम् । तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते' ॥ ज्योतिःप्रकाशे–'प्रतिकूलेपि कर्तव्यो विवाहो मासतः परः । शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत् पुनः' ॥ शान्तिं विनायकशान्तिम् । तथा च मेधातिथिः–'संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥' इति । 'प्रतिकूले न कर्तव्यो गच्छेद्यावदृतुत्रयम् । प्रतिकूलेपि कर्तव्यमित्याहुर्बहुविप्लवे ॥ प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ॥' ज्योतिःसागरे–'दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्ष्यते' ॥ मेधातिथिः–'पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् । प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्' ॥

अथ रजोदोषे निर्णयः । माधवीये–'प्रारम्भात् प्राग्विवाहस्य माता यदि रजस्वला । निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात्' ॥ आरम्भात् नान्दीश्राद्धात् । 'नान्दीमुखं विवाहादौ' इत्यादिना तस्यैव प्रारम्भोक्तेः मेधातिथिः–'चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्राय-

रजोदोषः ।

स्तस्य न शोभनम् । वधूवरान्यतमयोर्जननी चेद्रजस्वला । तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत्' ॥ वृद्धमनुः—'विवाहव्रतचूडासु माता यदि रजस्वला । तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः' ॥ गर्गः—'यस्योद्वाहादिमाङ्गल्ये माता यदि रजस्वला । तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः' ॥ नान्दीश्राद्धोत्तरं रजोदोषे तु कपर्दिकारिकासु—'सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् । हैमीं माषमितां पद्मां श्रीसूक्तविधिनार्चयेत् ॥ प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेत् ।' इति । सूतकादिसंकटे तु—कूष्माण्डीभिर्घृतं हुत्वा पयस्विनीं गां च दत्त्वा विवाहादि कुर्यात् इति च वक्ष्यते ॥

एकत्र मङ्गलम् ।

अथैकक्रियानिर्णयः । ज्योतिर्निबन्धे वृद्धमनुः—'एकमातृजयोरेकवासरे पुरुषस्त्रियोः । न समानक्रियां कुर्यान्मातृभेदे विधीयते' ॥ एतेन एकस्य पुंसो विवाहद्वयमेकदिने निषिद्धं मातृभेदाभावात् । नारदः—'पुत्रोद्वाहात्परं पुत्रिविवाहो न ऋतुत्रये । न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ॥ वराहः—'विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्' ॥ मदनरत्ने वसिष्ठः—'न पुंविवाहोर्ध्वमृतुत्रयेपि विवाहकार्यं दुहितुः प्रकुर्यात् । न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः ॥ एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् । षण्मासमध्ये मुनयः समूचुर्न मण्डनं मुण्डनतोपि कार्यम्' ॥ एतदपवादस्तत्रैव—'ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् । तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते' ॥ सारावल्याम्—'फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रयविलंघनम्' ॥ संहिताप्रदीपे—'ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुः समार्धम् ॥ अप्राप्य कन्यां श्वशुरालयं च वधूः प्रवेश्या स्वगृहं च नादौ' ॥ मदनरत्ने वसिष्ठः—'द्विशोभनं त्वेकगृहेपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु । आवश्यकं शोभनमुत्सवो वा द्वारेथवाचार्यविभेदतो वा ॥ एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् । भिन्नोदरप्रसूतानां नेति शातातपोब्रवीत्' ॥ ज्योतिर्निबन्धे कात्यायनः—'कुले ऋतुत्रयादर्वाङ् मुण्डनान्न तु मण्डनम् । प्रवेशान्निर्गमो नेष्टो न कुर्यान्मंगलत्रयम् ॥ कुर्वन्ति मुनयः केचिदन्यस्मिन्वत्सरे लघु । लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥ पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः । मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥ चौलं मुण्डनमेवोक्तं वर्जयेन्मण्डनात्परम् । मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥ अभिन्नवत्सरेपि स्यात्तदहस्तत्र भेदयेत् । अभेदे तु विनाशः स्यान्न कुर्यादेकमण्डपे' ॥

संकटे तु कपर्दिकारिकासु वराहमिहिरश्च—'उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाचित् । यावच्चतुर्थं दिनमत्र पूर्वं समाप्य चान्योद्वहनं विदध्यात्' ॥

१—'चौलात्प्राक् परतश्च' इति टीका ।

कश्यपः—'मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेपि वा । पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत्' ॥ ज्योतिर्निबन्धे—'विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता स्यात्' ॥ तथा—'विवाहमध्ये यदि चेत् क्षयाहस्तत्र स्वमुख्याः पितरो न यान्ति । वृत्ते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्नैतु दूषयन्ति' ॥ 'स्वधाभिः' इति श्रुतेश्च । मासिकविषये कालहेमाद्रौ शाठचायनिः—'प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्तुर्नान्दीमुखं द्विजः' ॥ वृद्धिं विनापकर्षे दोषमाह तत्रैवोशनाः—'वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ॥ स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥' इति । मेधातिथिः—'प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थे ततः पुंसि पञ्चमे शुभदं भवेत्' ॥ स्मृत्यन्तरे—'सापिण्डीकरणादर्वागपकृष्य कृतान्यपि ॥ पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ।

स्मृतिसारावल्याम्—'भ्रातृयुगे स्वसृयुगे भ्रातृष्वसृयुगे तथा । एकस्मिन्मण्डपे चैव न कुर्यान्मण्डनद्वयम्' ॥ सोदरविषयमेतत् । यमः—'एकोदरप्रसूतानामेकस्मिन् वासरे पुनः । विवाहं नैव कुर्वीत मण्डनोपरि मुण्डनम्' ॥ गार्ग्यः—'भ्रातृयुगे स्वसृयुगे भ्रातृष्वसृयुगं तथा । न कुर्यान्मङ्गलं किंचिदेकस्मिन्मण्डपेहनि ॥ एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः । क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च' ॥ ज्योतिर्विवरणे—'एकोदरयोरेकदिनोद्वहने भवेन्नाशः । नद्यन्तर एकदिने केप्याहुः संकटे शुभम् ॥ ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रयं स्यात् । नारीविवाहात्तदहेपि शस्तं नरस्य पाणिग्रहमाहुरार्याः' ॥ भिन्नमातृजयोस्तु एकवासरे विवाहमाह मेधातिथिः—'पृथङ्मातृजयोः कार्यो विवाहस्त्वेकवासरे । एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ॥ पुष्पपट्टिकयोः कार्यं दर्शनं न शिरस्थयोः । भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत्' ॥ यमयोस्तु विशेषः । भट्टकारिकायाम्—'एकस्मिन् वत्सरे चैकवासरे मण्डपे तथा । कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः' ॥ ज्योतिर्निबन्धे नारदः—'प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् । नैवैकजन्ययोः पुंसोरेकजन्ये तु कन्यके ॥ नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् । नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः ॥ न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन' इति ॥

---

१—'दूषयेत्ताम्' इत्यपि पाठः । २—वृद्ध्युत्तरं तु प्रेतकर्माणि लुप्यन्ते । मनःसमाधानाय तु रुद्रैकादशिनीपूजादिकमाचरन्ति । इति टीका । ३—उभाभ्यां भगिनीभ्यां शिरःस्थपुष्पपट्टिकादर्शनं न कार्यम् । एतावता परस्परवरशिरःस्थपुष्प पट्टिकादर्शनं परस्परकन्ययोर्निषिद्धमिति लभ्यते । इति टीका ।

